श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

# ॥ श्रीकृष्णाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

# ॥ श्रीकृष्णाष्टकम् ॥

वसुदेव सुतं देवं कंस चाणूरमर्दनम्।
देवकी परमानन्दं कृष्णं वन्दे जगद्गुरुम्॥ १ ॥

अतसीपुष्प सङ्काशं हारनूपुर शोभितम्।
रत्नकङ्कण केयूरं कृष्णं वन्दे जगद्गुरुम्॥ २ ॥

कुटिलालक संयुक्तं पूर्ण चन्द्रनिभाननम्।
विलसत्कुण्डल धरं कृष्णं वन्दे जगद्गुरुम्॥ ३ ॥

मन्दार गन्धसंयुक्तं चारुहासं चतुर्भुजम्।
बर्हि पिञ्छाव चूडाङ्गं कृष्णं वन्दे जगद्गुरुम्॥ ४ ॥

उत्फुल्ल पद्म पत्राक्षं नीलजीमूत सन्निभम्।
यादवानां शिरोरत्नं कृष्णं वन्दे जगद्गुरुम्॥ ५ ॥

रुक्मिणी केळिसंयुक्तं पीताम्बर सुशोभितम्।
अवाप्त तुलसीगन्धं कृष्णं वन्दे जगद्गुरुम्॥ ६ ॥

गोपिकानां कुचद्वन्द्व कुङ्कुमाङ्कित वक्षसम्।
श्रीनिकेतं महेष्वासं कृष्णं वन्दे जगद्गुरुम्॥ ७ ॥

श्रीवत्साङ्कं महोरस्कं वनमाला विराजितम्।
शङ्ख चक्रधरं देवं कृष्णं वन्दे जगद्गुरुम्॥ ८ ॥

कृष्णाष्टकमिदं पुण्यं प्रातरुत्थाय यः पठेत्।
कोटि जन्म कृतं पापं स्मरणेन विनश्यति॥ ९ ॥

॥ इति श्रीकृष्णाष्टकम् सम्पूर्णम्॥